# Śiva Sūtras
# The Supreme Awakening

with the Commentary of
Kshemaraja

*Revealed by*
Swami Lakshmanjoo

Having destroyed the impurities *(mala) āṇavamala, māyīyamala* and *kārmamala*, and become absolutely pure *(nirmala)*, then, even though he lives in the world of impurity *(mala)*, he does not become attached to it. (*Svacchanda Tantra* 10.372)

In this sūtra, this word *(bhūyaḥ)* "repeatedly" means he gets the consciousness of world, in and out, again and again. The world appears as if it has risen inside and then it again merges in his own self. And this happens over and over again, not once, not twice, but repeatedly. This is the purpose of saying that for this yogī, the state of being Śiva is not fresh or new. It has not appeared for the first time. This state of being Śiva is already his nature.

It is only due to the energy of *māyā*, which causes you to be mentally inefficient, that differentiated perception arises. It is because of this you cannot hold the state of universal consciousness.

So, practicing in this way, repeatedly taking it out and then bringing it back to your own nature, is intended for knowing this very state of being.

— —

This is the end of the Third Awakening.

— —

# Conclusion

1. I have placed this commentary on the *Śiva Sūtra* before the public because it is adorned with references from the *āgamas* and the *Spanda Śāstra*.

2. For the sake of destroying the differentiated perception of this universe, let those fortunate persons relish the nectar of this *Śiva Sūtra* commentary of mine. This *Śiva Sūtra Vimarśinī*, from which flows the secret of Śiva, is filled with that ever-new existent nectar and its essence.

3. The glory of this *Śiva Sūtras* commentary of mine is that it has the power to generate curiosity to realize Śaivism in the minds of those who have no curiosity. It expands and generates a great change in their intellects. By merely tasting this nectar, the fear of birth, old age, and death is removed.

4. The ordinary public, because their consciousness is concealed by the adjustment of the ego on a limited body in the waking state, the dreaming state, and the state of deep sleep,[40] does not perceive the original state of their God consciousness, which is great and which belongs to Lord Śiva himself. And when, because of the teaching of *Śiva Sūtra Vimarśinī*, that rare soul realizes that this universe is only existing as congealed foam in the ocean of nectar of universal consciousness, then truly he has become one with Lord Śiva.

---

40. These three states of ordinary consciousness—waking, dreaming, and deep sleep—are defined as being the states (*bhāva*) of *dehapramātṛi*,

# *Conclusion*

5. O fortunate ones, may you immediately cross this ocean of *saṁsāra* and be established and rooted in the supreme state of God consciousness, which is filled with the nectar of eternal light *(prakāśa)*.

This *Śiva Sūtra,* which has come from the mouth of Lord Śiva and which is shining with the real secret of his being, will, by the trick of your Master, cause you to quickly overcome differentiated universal perception.

— —

Here ends the *Śiva Sūtra Vimarśinī.*

— —

---

*puryastakpramātṛi,* and *prāṇapramātṛi.* The state of *deha pramātṛi*—the state of the experiencer attached to the physical body—is the state found in the state of wakefulness. The state of *puryastakpramātṛi*—the state of the eightfold experiencer—is the state found in the dreaming state. The state of *prāṇa pramātṛi* is the state of limited being found when you are absorbed in the world of sound sleep.

ओं नमः शिवाय

# अथ शिवसूत्रविमर्शिनी

## प्रथम उन्मेषः

—:o:—

रुद्रक्षेत्रज्ञवर्गः समुदयति यतो यत्र विश्रान्तिमृच्छेद्
यत्तत्त्वं यस्य विश्वंस्फुरितमयमियद्यन्मयं विश्वमेतत् ।
स्वाच्छन्द्या-नन्दवृन्दो-च्छलदमृतमयानुत्तरस्पन्दतत्त्वं
चैतन्यं शाङ्करं तज्जयति यदखिलं द्वैतभासा-द्वयात्म ।।

—:o:—

**आसमञ्जस्यमालोच्यवृत्तीना- मिह तत्त्वतः ।**
**शिवसूत्रं व्याकरोमि गुर्वाम्नायविगानतः ।।**

इह कश्चित् शक्तिपातवशोन्मिषन्माहेश्वरभक्त्यतिशयात् अनङ्गीकृताधरदर्शनस्थ-नागबोध्या-दि-सिद्धादेशनः शिवाराधनपरः पारमेश्वर-नानायोगिनी-सिद्ध-सत्संप्रदाय-पवित्रितहृदयः श्रीमहा- देवगिरौ महामाहेश्वरः श्रीमान् वसुगुप्तनामा गुरुरभवत् । कदाचिच्च असौ `द्वैतदर्शनाधिवासितप्राये जीवलोके रहस्यसंप्रदायो मा विच्छेदि` इत्याशयतः अनुजिघृक्षापरेण परमशिवेन स्वप्ने अनुगृह्य उन्मिषितप्रतिभः कृतः यथा ``अत्र महीभृति महति शिलातले रहस्यम् अस्ति तत् अधिगम्य अनुग्रहयोग्येषु प्रकाशय`` इति । प्रबुद्धश्च असौ अन्विष्यन् तां महतीं शिलां करस्पर्शनमात्रपरिवर्तनतः संवादी- कृतस्वप्नां प्रत्यक्षी कृत्य, इमानि शिवोपनिषत्-संग्रहरूपाणि शिवसूत्राणि ततः समाससाद । एतानि च सम्यक् अधिगम्य

भट्टश्रीकल्लटाद्येषु सच्छिष्येषु प्रकाशितवान् स्पन्दकारिकाभिश्च संगृहीतवान् । तत्पारम्पर्यप्राप्तानि स्पन्दसूत्राणि अस्माभिः स्पन्दनिर्णये सम्यक् निर्णीतानि । शिवसूत्राणि तु निर्णीयन्ते ॥
तत्र प्रथमं नरेश्वरभेदवादि-प्रातिपक्ष्येण चैतन्यपरमार्थतः शिव एव विश्वस्य आत्मा इति आदिशति-

**चैतन्यमात्मा ॥१॥**

इह अचेतितस्य कस्यापि सत्त्वाभावात्, चितिक्रिया सर्वसामान्यरुपा इति, चेतयते इति चेतनः सर्वज्ञानक्रियास्वतन्त्रः, तस्य भावः चैतन्यं सर्वज्ञानक्रियासंबन्धमयं परिपूर्ण स्वातन्त्र्यम् उच्यते । तच्च परमशिवस्यैव भगवतः अस्ति; अनाश्रितान्तानां तत्परतन्त्रवृत्तित्वात् । स च यद्यपि नित्यत्व-व्यापकत्वामूर्तत्वाद्यनन्तधर्मात्मा, तथापि नित्यत्वादीनाम् अन्य-त्रापि संभाव्यत्वात्, अन्यासंभविनः स्वातन्त्र्यस्यैव उद्धुरीकारप्रदर्शनमिदम् । इत्थं धर्मान्तरप्रतिक्षेपतश्च, चैतन्यमिति भावप्रत्ययेन दर्शितम् । तदेतत् आत्मा, न पुनरन्यः को ऽपि भेदवाद्यभ्युपगतो भिन्नभिन्नस्वभावः । तस्य अचैतन्ये जडतया अनात्मत्वात् । चिदात्मत्वे भेदानुपपत्तेः, चितो देशकालाकारैः चिद्व्यतिरेकात् अचेत्यमानत्वेन असद्भिः, चेत्यमानत्वेन तु चिदात्मभिः, भेदस्य आधातुम् अशक्यत्वात्, चिन्मात्रत्वे तु आत्मनां स्वभावभेदस्य अघटनात्; वक्ष्यमाणनीत्या अव्यतिरिक्तमलसंबन्ध-योगेनापि भेदस्य अनुपपत्तेः; प्राक् मलस्य सत्तवेऽपि मुक्तिदशायां तदुपशमनात् नानात्मवादस्य वक्तुम् अशक्यत्वात्, मलसंस्कार-संभवे वा, अनादिशिवात् कथंचित् अपकर्षे वा,मुक्तशिवाः संसारिण एव स्युरिति । यथोक्तम्

'चैतन्यमे क एवात्मा ...

इति नानात्मवादस्य अनुपपत्तिः सूचिता ।

अथ च 'आत्मा क' इति जिज्ञासून् उपदेश्याम् प्रति बोधयितुं, न शरीर-प्राणबुद्धिशून्यानि लौकिकचार्वाकवैदिकयोगाचारमाध्यमिकाद्यभ्युपगतानि आत्मा, अपि तु यथोक्तं चैतन्यमेव । तस्यैव शरीरादि-कल्पितप्रमातृपदेऽपि अकल्पिताहंविमर्शमय-सत्यप्रमानृत्वेन स्फुरणात् ।

तदुक्तं श्रीमृत्युजिद्भट्टारके

'परमात्मस्वरूपं तु सर्वोपाधिविवर्जितम् ।
चैतन्यमात्मनो रूपं सर्वशास्त्रेषु पठ्यते ।'

इति । श्रीविज्ञानभैरवेऽपि

'चिद्धर्मा सर्वदेहेषु विशेषो नास्ति कुत्रचित् ।
अतश्च तन्मयं सर्वं भावयन् भवजिज्जनः ।।'

इति । एतदेव

'यतः करणवर्गोऽयं ...।'

इति कारिकाद्वयेन संगृह्य उपदेश्यान् प्रति साभिज्ञानं गुरुणा उपदिष्टं श्रीस्पन्दे । किंच यदेतत् चैतन्यम् उक्तं स एव आत्मा, स्वभावः, विशेषाचोदनात् भावाभावरूपस्य विश्वस्य जगतः । नहि अचेत्यमानः कोऽपि कस्यापि कदाचिदपि स्वभावो भवति । चेत्यमानस्तु स्वप्रकाशचिदेकीभूतत्वात् चैतन्यात्मैव । तदुक्तं श्रीमदुच्छुष्मभैरवे

'यावन्न वेदका एते तावद्वेद्याः कथं प्रिये ।
वेंदकं वेद्यमेकं तु तत्त्वं नास्त्यशुचिस्ततः ।।'

इति । एतदेव

'यस्मात्सर्वमयो जीवः ...।'

इति कारिकाद्वयेन संगृहीतम् ।

यतः चैतन्यं विश्वस्य स्वभावः तत एव तत्साधनाय प्रमाणादि वराकम्

अनुपयुक्तं; तस्यापि स्वप्रकाशचैतन्याधीन सिद्धिकत्वात, चैतन्यस्य च प्रोक्तयुक्त्या केनापि आवरीतुम् अशक्यत्वात् सदाप्रकाशमानत्वात् । यदुक्तं श्रीत्रिकहृदये

`स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला ॥`

इति । यो लङ्घितुम् ईहते तस्य यथा पादोद्देशे शिरो न स्यात् तथा इयमिति अत्र संबन्धः । अनेनैव आशयेन स्पन्दे

`यत्र स्थितम् ...।`

इत्यादि उपक्रम्य

... तदस्ति परमार्थतः ॥`

इत्यन्तेन महता ग्रन्थेन शङ्करात्मक-स्पन्दतत्त्वरूपं चैतन्यं सर्वदा स्वप्रकाशं परमार्थसत् अस्ति इति प्रमाणीकृतम् ॥१॥

यदि जीवजडात्मनो विश्वस्य परमशिवरूपं चैतन्यमेव स्वभावः तत् कथम् अयं बन्ध इत्याशङ्काशान्तये संहितया इतरथा च अकारप्रश्लेषाप्रश्लेषपाठतः सूत्रम् आह-

**ज्ञानं बन्धः ॥२॥**

इह उक्तयुक्त्या चित्प्रकाशव्यतिरिक्तं न किञ्चिद् उपपद्यत इति मलस्यापि का सत्ता कीदृग् वा तन्निरोधकत्वं स्यादिति भेदवादोक्तप्रक्रिया-परिहारेण

`मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ॥`

इति ।

`अज्ञानाद्बध्यते लोकस्ततः सृष्टिश्च संहृतिः ॥`

इति श्रीमालिनीविजय-श्रीसर्वाचारोक्तस्थित्या यः परमेश्वरेण

स्वस्वातन्त्र्यशक्त्याभासितस्वरूपगोपना-रूपया महामाया-शक्त्या स्वात्मन्याकाश-कल्पेऽनाश्रितात्-प्रभृति मायाप्रमात्रन्तं संकोचोऽवभासितः स एव शिवाभेदाख्यात्यात्मका- ज्ञानस्वभावोऽपूर्णम्मन्यत्तात्मकाणवमल सतत्त्वसंकुचितज्ञानात्मा बन्धः । यथा च व्यतिरिक्तस्य मलस्यानुपपन्नत्वं तथा अस्माभिः श्रीस्वच्छन्दोद्द्योते पञ्चमपटलान्ते दीक्षाविचारे वितत्य दर्शितम् । एष च सूत्रार्थः

`निजाशुद्ध्या ऽसमर्थस्य ...।`

इति कारिकाभागेन संगृहीतः । एवमात्मनि अनात्मताभि-मानरूपाख्यातिलक्षणाज्ञानात्मकं ज्ञान नं केवलं बन्धो यावद् अनात्मनि शरीरादौ आत्मताभिमानत्मकम् अज्ञानमूलं ज्ञानमपि बन्ध एव । एतच्च

`परामृतरसापाय ...।`

इति कारिकाया संगृहीतम् ।

एवं चैतन्यशब्देनोक्तं यत्किञ्चित् स्वातन्त्र्यात्मकं रूपं, तत्र चिदात्मन्यपि स्वातन्त्र्याप्रथात्मविज्ञानाकलवद् अपूर्णम्मन्य-तामात्रात्मना रूपेण, स्वातन्त्र्येऽपि देहादौ अबोधरूपेण अनात्मन्यात्मताभिमानात्मना रूपेण, द्विप्रकारमाणवमलम् अनेन सूत्रेण सूत्रितम् । तदुक्तं श्रीप्रत्यभिज्ञायाम्

`स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥`

इति ॥२॥

किम् ईदृगाणवमलात्मैव बन्धः ? न इत्याह-

**योनिवर्गः कलाशरीरम् ॥३॥**

बन्ध इत्यनुवर्तते, योऽयं योनेर्विश्वकारणस्य मायाया: संबन्धी वर्ग: साक्षात् पारम्पर्येण च, तद्धेतुको देहभुवनाद्यारम्भी किञ्चित्कर्तृत्वाद्यात्मककलादिक्षि-त्यन्तस्तत्त्वसमूह:, तद्रूपं मायीयम्, तथा कलयति स्वस्वरूपावेशेन तत्तद् वस्तु परिच्छिनत्तीति कला व्यापार:, शरीरं स्वरूपं यस्य तत् कलाशरीरं कार्मं मलमपि बन्ध इत्यर्थ: । एतदपि

`निजाशुद्ध्यासमर्थस्य कर्तव्येष्वभिलाषिण: ।`

इत्यनेनैव संगृहीतम् । यथा चैतत् तथा अस्मदीयात् स्पन्दनिर्णयादवबोद्धव्यम् । एषां च कलादीनां किञ्चित्कर्तृ-त्वादिलक्षणं स्वरूपमाणवमलभित्तिलग्नं पुंसामावरकतया मलत्वेन सिद्धमेव । यदुक्तं श्रीमत्स्वच्छन्दे

`मल प्रध्वस्तचैतन्यं कलाविद्यासमाश्रितम् ।
रागेण रञ्जितात्मानं कालेन कलितं तथा ।।
नियत्या यमितं भूय: पुंभावेनोपबृंहितम् ।
प्रधानाशयसंपन्नं गुणत्रयसमन्वितम् ।।
बुद्धितत्त्वसमासीनमहङ्कारसमावृतम् ।
मनसा बुद्धिकर्माक्षैस्तन्मात्रै: स्थूलभूतकै: ।`

इति । कार्म-मलस्याप्यावरकत्वं श्रीमालिनीविजये प्रदर्शितम्

`धर्माधर्मात्मकं कर्म सुखदु:खादिलक्षणम् ।`

इति । तदेतत् मायीयं कार्मं च मलम्

`भिन्नवेद्य प्रथात्रैव मायाख्यं जन्मभोगदम् ।
कर्तर्यबोधे कार्मं च मायशक्त्यैव तत्त्रयम् ।।`

इति

श्रीप्रत्यभिज्ञायाम् आणवमलभित्तिकं संकुचित विशिष्टज्ञानतयैवोक्तम् ।।३।।

अथ कथमस्याज्ञानात्मकज्ञान-योनिवर्ग-कलाशरीररूपस्य त्रिविधस्य मलस्य बन्धकत्वमित्याह-

**ज्ञानाधिष्ठानं मातृका ।।४।।**

यदेतत् त्रिविधमलस्वरूपम् अपूर्णम्मन्यताभिन्नवेद्यप्रथाशुभाशुभवासनात्मक-विविधंज्ञानरूपमुक्तम्, तस्य आदिक्षान्तरूपा अज्ञाता माता मातृका विश्वजननी तत्तत्संकुचीतवेद्याभासात्मनो ज्ञानस्य `अपूर्णोऽस्मि, क्षामः स्थूलो वास्मि, अग्निष्टोमयाज्यस्मि, इत्यादितत्तदविकल्पकसविकल्प-कावभासपरामर्शमयस्यतत्तद्वाचकशब्दानुवेधद्वारेण शोक-स्मय-हर्ष-रागादिरूपतामादधाना

`करन्ध्रचितिमध्यस्था ब्रह्मपाशावलम्बिकाः ।
पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ॥`

इति श्रीतिमिरोद्घाटप्रोक्तनीत्या वर्गकलाद्यधिष्ठातृब्राह्म्यादि-शक्तिश्रेणी-शोभिनी श्रीसर्ववीराद्यागमप्रसिद्धलिपिक्रमसंनिवेशो-त्थापिका अम्बा-ज्येष्ठा-रौद्री-वामा-ख्यशक्तिचक्रचुम्बिता शक्तिरधिष्टात्री, तदधिष्टानादेव हि अन्तर-भेदानुसंधिवन्ध्यत्वात क्षणमपि अलब्धविश्रान्तीनि बहिर्मुखान्येव ज्ञानानि, इति युक्तैव एषां बन्धकत्वोक्तिः । एतच्च

`शब्दराशिसमुत्थस्य ...।`

इति कारिकया,

`स्वरूपावरणे चास्य शक्तयः सततोत्थिताः ।`

इति च कारिकया संगृहीतम् ।।४।।

अथ एतद्बन्धप्रशमोपायमुपेयविश्रान्तिसतत्त्वमादिशाति-

**उद्यमो भैरवः ।।५।।**

योऽयं प्रसरद्रूपाया विमर्शमय्याः संविदो झगिति उच्छलनात्मकपरप्रति-भोन्मज्जनरूप उद्यमः स एव सर्वशक्तसामरस्येन अशेषविश्वभरितत्वात् सकलकल्पनाकुलालंकवलनमयत्वाच्च भैरवो भैरवात्मकस्वस्वरूपा-भिव्यक्तिहेतुत्वात् भक्तिभाजाम् अन्तर्मुखैतत्तत्त्वावधानधनानां जायते, इत्युपदिष्टं भवति । उक्तं च श्रीमालिनीविजये

> 'अकिंचिच्चिन्तकस्यैव गुरूणा प्रतिबोधतः ।
> जायते यः समावेशः शाम्भवोऽसावुदीरितः ॥

इति । अत्र हि 'गुरूणा प्रतिबोधताः' इत्यत्र गुरूतः स्वस्मात् प्रतिबोधतः इत्यस्यार्थो गुरुभिरादिष्टः । श्रीस्वच्छन्देऽपि उक्तम्

> 'आत्मनो भैरवं रूपं भावयेद्यस्तु पूरुषः ।
> तस्य मन्त्राः प्रसद्ध्यन्ति नित्ययुक्तस्य सुन्दरि ॥'

इति । भावनं हि अत्र अन्तर्मुखोद्यन्तृतापदविमर्शनमेव । एतच्च

> 'एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
> उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥'

इत्यनेन संगृहीतम् ॥५॥

एवं झगिति परप्रतिभोन्मेषावष्टम्भोपायिकां भैरवसमापत्तिम् अज्ञानबन्धप्रशमैकहेतुं प्रदर्श्य, एतत्परामर्शप्रकर्षाद् व्यु त्थानमपि प्रशान्तभेदावभासं भवतीत्याह-

**शक्तिचक्रसंधाने विश्वसंहारः ॥६॥**

योऽयं परप्रतिभोन्मज्जनात्मोद्यन्तृतास्वभावो भैरव उक्तः अस्यैव अन्त-र्लक्ष्यबहिर्दृष्ट्यात्मतया निःशेषशक्तिचक्रक्रमाक्रमाक्रामिणी अतिक्रान्तक्रमा-क्रमाति- रिक्तारिक्ततदुभयात्मतयापि अभिधीयमानापि अनेतद्रूपा अनुत्तरा

परा स्वातन्त्र्यशक्तिः काप्यस्ति यया स्वभित्तौ महदुल्लासात् प्रभृति परप्रमातृविश्रान्त्यन्तं श्रीमत्सृष्ट्यादिशक्तिचक्रस्फारणात्मा क्रीडेयमादर्शिता । तस्यैतदाभासितस्य शाक्तिचक्रस्य रहस्याम्नायाम्नातनीत्या यत्संधानं यथोचितक्रमविमर्शनं तस्मिन् सति, कालाग्न्यदेश्वरमकलान्तस्य विश्वस्य संहारो, देहात्मतया बाह्यतया च अवस्थितस्यापि सतः परसंविदग्निसाद्भावो भवतीत्यर्थः । उक्तं च श्रीभर्गशिखायाम्

`मृत्युं च कालं च कलाकलापं
विकारजालं प्रतिपत्तिसात्म्यम् ।
ऐकात्म्य नानात्म्यविकल्पजातं
तदा स सर्वं कवलीकरोति ॥`

इति । श्रीरीमद्वीरावलावपि

`यत्र सर्वे लयं यानति दह्यन्ते तत्त्वसंचयाः ।
तां चितिं पश्य कायस्थां कालानलसमत्विषम् ॥`

इति श्रीमन्मालिनीविजयेऽपि

`उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥`

इत्युक्त्या एतदेव भङ्ग्या निरूपितम् । एतच्च सद्गुरुचरणोपासनया अभिव्यक्तिमायातीति नाधिकमुन्मीलितम् ।

एतदेव

`यस्योन्मेषनिमेषाभ्यां ... ।`

इति

`यदा त्वेकत्र संरूढः ... ।`

इति च प्रथमचरमश्लोकाभ्यां संगृहीतम् ॥६॥

योऽयं प्रसरद्रूपाया विमर्शमय्याः संविदो झगिति उच्छलनात्मकपरप्रति-
भोन्मज्जनरूप उद्यमः स एव सर्वशक्तसामरस्येन अशेषविश्वभरितत्वात्
सकलकल्पनाकुलालंकवलनमयत्वाच्च भैरवो भैरवात्मकस्वस्वरूपा-
भिव्यक्तिहेतुत्वात् भक्तिभाजाम् अन्तर्मुखैतत्तत्त्वावधानधनानां जायते,
इत्युपदिष्टं भवति । उक्तं च श्रीमालिनीविजये

'अकिंचिच्चिन्तकस्यैव गुरूणा प्रतिबोधतः ।
जायते यः समावेशः शाम्भवोऽसावुदीरितः ॥

इति । अत्र हि 'गुरूणा प्रतिबोधताः' इत्यत्र गुरूतः स्वस्मात्
प्रतिबोधतः इत्यस्यार्थो गुरुभिरादिष्टः । श्रीस्वच्छन्देऽपि उक्तम्

'आत्मनो भैरवं रूपं भावयेद्यस्तु पूरुषः ।
तस्य मन्त्राः प्रसद्ध्यन्ति नित्ययुक्तस्य सुन्दरि ॥'

इति । भावनं हि अत्र अन्तर्मुखोद्यन्तृतापदविमर्शनमेव । एतच्च

'एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥'

इत्यनेन संगृहीतम् ॥५॥

एवं झगिति परप्रतिभोन्मेषावष्टम्भोपायिकां भैरवसमापत्तिम्
अज्ञानबन्धप्रशमैकहेतुं प्रदर्श्य, एतत्परामर्शप्रकर्षाद् व्यु त्थानमपि
प्रशान्तभेदावभासं भवतीत्याह-

**शक्तिचक्रसंधाने विश्वसंहारः ॥६॥**

योऽयं परप्रतिभोन्मज्जनात्मोद्यन्तृतास्वभावो भैरव उक्तः अस्यैव अन्त-
र्लक्ष्यबहिर्दृष्ट्यात्मतया निःशेषशक्तिचक्रक्रमाक्रमाक्रामिणी अतिक्रान्तक्रमा-
क्रमाति- रिक्तारिक्ततदुभयात्मतयापि अभिधीयमानापि अनेतद्रूपा अनुत्तरा

परा स्वातन्त्र्यशक्तिः काप्यस्ति यया स्वभित्तौ मह्युल्लासात् प्रभृति परप्रमातृविश्रान्त्यन्तं श्रीमत्सृष्ट्यादिशक्तिचक्रस्फारणात्मा क्रीडेयमादर्शिता । तस्यैतदाभासितस्य शाक्तिचक्रस्य रहस्याम्नायाम्नातनीत्या यत्संधानं यथोचितक्रमविमर्शनं तस्मिन् सति, कालाग्न्यदेश्वरमकलान्तस्य विश्वस्य संहारो, देहात्मतया बाह्यतया च अवस्थितस्यापि सतः परसंविदग्निसाद्भावो भवतीत्यर्थः । उक्तं च श्रीभर्गशिखायाम्

`मृत्युं च कालं च कलाकलापं
विकारजालं प्रतिपत्तिसात्म्यम् ।
ऐकात्म्य नानात्म्यविकल्पजातं
तदा स सर्वं कवलीकरोति ॥`

इति । श्रीरीमद्वीरावलावपि

`यत्र सर्वे लयं यानति दह्यन्ते तत्त्वसंचयाः ।
तां चितिं पश्य कायस्थां कालानलसमत्विषम् ॥`

इति श्रीमन्मालिनीविजयेऽपि

`उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥`

इत्युक्त्या एतदेव भङ्ग्या निरूपितम् । एतच्च सद्गुरुचरणोपासनया अभिव्यक्तिमायातीति नाधिकमुन्मीलितम् ।

एतदेव

`यस्योन्मेषनिमेषाभ्यां ... ।`

इति

`यदा त्वेकत्र संरूढः ... ।`

इति च प्रथमचरमश्लोकाभ्यां संगृहीतम् ॥६॥

एवमुपसंहृतविश्वस्य न समाधिव्युत्थानभेदः कोऽपि इत्याह-

**जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंभवः ।।७।।**

समनन्तरनिरूपयिष्यमाणानां जाग्रत्स्वप्नसुषुप्तानां भेदे नानारूपे पृथक्त्वावभासे `उद्यमो भैरवः` (१-५) इति लक्षितस्य स्फुरत्तात्मनः सर्वदशानुस्यूतस्य तुर्यस्य य आभोगश्चमत्कारः तस्य संभवो नित्यमेव तुर्यचमत्कारमयतवं प्रोक्तमहायोगयुक्तस्य भवतीत्यर्थः । केचित् संभव इत्यत्र संविदिति स्पष्टार्थं पठन्ति । एतच्च

`ययेन्दुः पुष्पसंकाशः समन्तादवभासते ।
आह्लादनसमूहेन जगदाह्लादयेत्क्षणात् ।।
तद्वद्देवि महायोगी यदा पर्यटते महीम् ।
ज्ञानेन्दुकिरणैः सर्वैर्जगच्चित्रं समस्तकम् ।।
आह्लादयेत्समन्तात्तदवीच्यादशिवान्तकम् ।`

इत्यदिना श्रिचन्द्रज्ञाने जागरादौ तुर्याभोगमयत्वं महायोगिनोदर्शितम् । स्पन्दे तु

`जागरादिविभेदेऽपि ...।`

इति कारिकया संगृहीतम् ।।७।।

एतज्जाग्रदादित्रयं सूत्रत्रयेण लक्षयति-

**ज्ञानं जाग्रत् ।।८।।**

**स्वप्नो निकल्पाः ।।९।।**

**अविवेको मायासौषुप्तम् ।।१०।।**

सर्वसाधारणार्थविषयं बाह्येन्द्रियजं ज्ञानं लोकस्य जाग्रत् जागरावस्था ।

ये तु मनोमात्रजन्या असाधारणार्थविषया विकल्पाः स एव स्वप्नः स्वाप्नावस्था, तस्य एवंविधविकल्पप्रधानत्वात् । यस्तु अविवेको विवेचनाभावोऽख्यातिः, अतदेव मायारूपं मोहमयं सौषुप्तम । सौषुप्तं लक्षयता प्रसङ्गात् उच्छेद्याया मायाया अपि स्वरूपमुक्तम् । इत्थमपि च ईदृशेनाप्यनेन लक्षणेन तिसृष्वपि जागरादिदशासु त्रैरूप्यमस्तीति दर्शितम् । तथा चात्र यद्यत् स्वप्नदशोचितं प्रथममविकल्पकं ज्ञानं सा जागरा । ये तु तत्र विकल्पाः स स्वप्नः । तत्त्वाविवेचनं सौषुप्तम् । सौषुप्ते यद्यपि विकल्पा न संचेत्यन्ते, तथापि तत्प्रविविक्षायां तथोचितजाग्रज्ज्ञानमिव तदनन्तरं संस्कारकल्पविकल्परूपस्तदुचितः स्वप्नोऽप्यस्त्येव । किं च योग्यभिप्रायेण प्रथमं तत्तद्धारणारूपं ज्ञानं जाग्रत, ततः तत्प्रत्ययप्रवाहरूपा विकल्पाः स्वप्नः, ग्राह्यग्राहकभेदासंचेतनरूपश्च समाधीः सौषुप्तम्, इत्यनया वचोयुक्त्या दर्शितम् । अत एव च श्रीपूर्वशास्त्रे जागरा दीनां परस्परानुवेधकृतो योग्यभिप्रायेणापि

`................. अबुद्धं बुद्धमे व च ।

प्रबुद्धं सुप्रबुद्धं च .................. ॥`

इत्यादिना भेदो निरूपितः ॥८॥९॥१०॥

एवं लोकयोग्यनुसारेण व्याख्याते जागरादित्रये शक्तिचक्रसंघानाद्विश्व-संहारेण यस्य तुर्याभोगमयत्वमभेदव्याप्त्यात्मकं स्फुरति, स तद्वाराधिरोहेण तुर्यातीतं पूर्वोक्तं चैतन्यमाविशन्-

**त्रितयभोक्ता वीरेशः ॥११॥**

एतज्जागरादित्रयं शक्तिचक्रानुसंधानयुक्त्या तुर्यानन्दाच्छुरितं यः तत्परामर्शनुप्रवेशप्रकर्षाद्विगलितभेदसंस्कारमानन्दरसप्रवाहमयमेव

पश्यति स त्रितयस्यास्य भोक्ता चमत्कर्ता । तत एव

`त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥`

इति नीत्या निःसपत्नस्वात्मसाम्राज्योऽयं परमानन्दपरिपूर्णो भवभेदग्रसन-प्रवणानां वीराणामिन्द्रियाणामीश्वरः स्वामी, श्रिमन्थानभैरवसत्तानुप्रविष्टो महाम्नायेषूच्यते । यस्तु एवंविधो न भवति स जागराद्यवस्थाभिर्भुज्यमानो-लौकिकः पशुरेव । योग्यपि इमां धारामनधरूढो न वीरेश्वरः, अपि तु मूढ एवेत्युक्तं भवति । एतच्च

`योगी स्वच्छन्दयोगेन स्वच्छन्द गतिचारिणा ।
स स्वच्छन्दपदे युक्तः स्वच्छन्दसमतां व्रजेत् ॥`

इत्यादिना श्रीस्वच्छन्दादिशास्त्रेषु वितत्य दर्शितम् । स्पन्देऽपि

`तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी ।`

इति कारिकया संगृहीतमेतत् ॥११॥

किमस्य महायोगिनः काश्चित् तत्त्वाधिरोहप्रत्यासन्ना भूमिकाः सन्ति? याभिस्तत्त्बोर्ध्ववर्तिनी भूमिर्लक्ष्यते । सन्ति, इत्याह-

**विस्मयो योगभूमिका ॥१२॥**

यथा सातिशयवस्तुदर्शने कस्यचित् विस्मयो भवति तथा अस्य महायोगिनो नित्यं तत्तद्वेद्यावभासामर्शाभोगेषु निःसामान्यातिशयनवनवचमत्कार-चिद्घनस्वात्मावेशवशात् स्मेरस्मेरस्तिमितविकसितसमस्तकरणचक्रस्य यो विस्मयोऽनवच्छिन्नानन्दे स्वात्मनि अपरितृप्तत्वेन मुहुर्मुहुराश्चर्यायमाणता, ता एव योगस्य परतत्त्वैक्यस्य संबन्धिन्यो भूमिकाः, तदध्यारोहविश्रान्ति-सूचिकाः परिमिता भूमयो, न तु कन्दबिन्द्वाद्यनुभववृत्तयः ।

तदुक्तं श्रिकुलयुक्तौ

`आत्मा चैवात्मना ज्ञातो यदा भवति साधकैः ।
तदा विस्मयमात्मा वै आत्मन्येव प्रपश्यति ॥`

इति । एतच्च

`तमधिष्ठातृभावेन स्वभावमवलोकयन् ।
स्वयमान इवास्ते यस्तस्येयं कुसृतिः कुतः ॥`

इति कारिकया संगृहीतम् ॥१२॥

ईदृग्योगिनः भूमिकासमापन्नस्यास्य

इच्छा शक्तिरुमा कुमारी ॥१३॥

योगिनः परभैरवतां सभापन्नस्य या इच्छा सा शक्तिरुमा, परैव पारमेश्वरी स्वातन्त्र्यरूपा, सा च कुमारी विश्वसर्गसंहाराक्रीडापरा `कुमार क्रीडायाम्` इति पाठात् । अथ च कुं भेदोत्थापिकां मायाभूमिं मारयति अनुद्भिन्नप्रसरां करोति तच्छीला । कुमारी च परानुपभोग्य भोक्त्रैकात्म्येन स्फुरन्ती ।

अथवा यथा उमा कुमारी परीहृतसर्वासङ्गा महेश्वरैकात्म्यसाधनाराधनाय नित्योद्युक्ता तथैव अस्येच्छा, इत्यस्मद्गुरुभिरित्थमेव पाठो दृष्टो व्याख्यातश्च । अन्यैस्तु `शक्तितमा` इति पठित्वा ज्ञानक्रियापेक्षोऽस्याः प्रकर्षो व्याख्यातः । एवं न लौकिकवत् अस्य योगिनः स्थूलेच्छा, अपि तु परा शक्तिरूपैव सर्वत्राप्रतिहता । तदुक्तं श्रिमत्स्वच्छन्दे

`सा देवी सर्वदेवीनां नामरूपैश्च तिष्ठति ।
योगमायाप्रतिच्छन्ना कुमारी लोकभाविनी ॥`

इति । श्रीमृत्युञ्जयभट्टारकेऽपि

`सा ममेच्छा पराशक्तिरवियुक्ता स्वभावजा ।
वह्नेरूष्मेव विज्ञेया रश्मिरूपा रवेरिव ॥
सर्वस्य जगतो वापि सा शक्तिः कारणात्मिका ॥`

इति । तदेतत्

`नहीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।
अपि त्वात्मबलस्पर्शत्पुरुषस्तत्समो भवेत् ॥`

इति कारिकया भङ्ग्या प्रतिपादितम् ॥१३॥

ईदृशस्य महेच्छस्य-

**दृश्यं शरीरम् ॥१४॥**

यद्यद् दृश्यं बाह्यमाभ्यन्तरं वा, तत्तत् सर्वम् `अहमिदम्` इति-सदाशिव-वन्महासमापत्त्या स्वाङ्गकल्पमस्य स्फुरति, न भेदेन ।
शरीरं च देहधीप्राणशून्यरूपं नीलादिवद् दृश्यं, न तु पशुवद्द्रष्टृतया भाति ।
एवं देहे बाह्ये च सर्वत्रास्य मयूराण्डरसवदविभक्तैव प्रतिपत्तिर्भवति ।
यथोक्तं श्रीविज्ञानभैरवे

`जलस्येवोर्मयो वह्नेर्ज्वालाभङ्ग्यः प्रभा रवेः ।
ममैव भैरवस्यैता विश्वभङ्ग्यो विनिर्गताः ॥`

इति । एतच्च

`भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ।`

इत्यनेन संगृहीतम् ॥१४॥

यच्चेदं सर्वस्य दृश्यस्य शरीरतया, शून्यान्तस्य च दृश्यतया, एकरूपं प्रकाशनमुक्तं नैतत् दुर्घटम्, अपि तु-

**हृदये चित्तसंघट्टाद्दृश्यस्वापदर्शनम् ॥१५॥**

विश्वप्रतिष्ठास्थानत्वात् चित्प्रकाशो हृदयं, तत्र [चित्त] संघट्टात् चलतश्चलतः तदेकाग्रभावनात् दृश्यस्य, नीलदेहप्राणबुद्ध्यात्मनः, स्वापस्य च, एतदभाव-रूपस्य शून्यस्य, दर्शनं, त्यक्तग्राह्यग्राहकविभेदेन यथावस्तु स्वाङ्गकल्पतया प्रकाशनं भवति । चित्प्रकाशतामभिनिविशमानं हि चित्तं तदाच्छुरितमेव विश्वं पश्यति । तदुक्तं श्रीविज्ञानभैरवे

`हृद्याकाशे निलीनाक्षः पद्मसंपुटमध्यगः ।
अनन्यचेताः सुभगे परं सौभाग्यमाप्नुयात् ॥`

इति । परं हि अत्र सौभाग्यं विश्वेश्वरतापत्तिः ।

तत्त्ववृत्तिसमापन्नं महायोगिनमुद्दिश्य श्रीमत्स्वच्छन्देऽपि

`स च सर्वेषु भूतेषु भावतत्त्वेन्द्रियेषु च ।
स्थावरं जङ्गमं चैव चेतनाचेतनं स्थितम् ॥
अध्वानं व्याप्य सर्वं सु सामरस्येन संस्थितः ।`

इति । स्पन्दे तु

`तथा स्वात्मन्यधिष्ठानात्सर्वत्रैवं भविष्यति ॥`

इत्यनेनैव एतत्संगृहीतम् ॥ १५॥

अत्रैव उपायान्तरमाह-

**शुद्धतत्त्वसंधानाद्वाऽपशुशक्ति ॥१६॥**

शुद्धं तत्त्वं परमशिवाख्यं, तत्र यदा विश्वमनुसंधत्ते `तन्मयमेव एतत्` इति, तदा अविद्यमाना पश्वाख्या बन्धशक्तिर्यस्य तादृगयं सदाशिववत् विश्वस्य जगतः पतिर्भवति । तदुक्तं श्रीमल्लक्ष्मीकौलार्णवे

`दीक्षासिद्धौ तु ये प्रोक्ताः प्रत्ययाः स्तोभपूर्वकाः ।
संधानस्यैव [illegible] ॥`

इति । श्रीविज्ञानभैरवे तु

`सर्वं देहं चिन्मयं हि जगद्वा परिभावयेत् ।
युगपन्निर्विकल्पेन मनसा परमोद्भवः ॥`

इति । तदेतत्

`इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन्सततं युक्तो जीवन्मुक्तो न संशयः ॥`

इति कारिकया संगृहीतम् ॥१६॥

ईदृग्ज्ञानरूपस्य अस्य योगिनः -

**वितर्क आत्मज्ञानम् ॥१७॥**

`विश्वात्मा शिव एवास्मि` इति यो वितर्को विचारः, एतदेव अस्य आत्मज्ञानम् । तदुक्तं श्रीविज्ञानभैरवे

`सर्वज्ञः सर्वकर्ता च व्यापकः परमेश्वरः ।
स एवाहं शैवधर्मा इति दार्ढ्याच्छिवो भवेत् ॥`

इति । स्पन्देऽपि

` ........................... अयमेवात्मनो ग्रहः ।`

इत्यनेन एतदुक्तम् । तत्र ही आत्मनो ग्रहणं ग्रहो ज्ञानम् एतदेव, यद्विश्वात्मकशिवाभिन्नत्वम्, एषोऽपि अर्थो विवक्षितः ॥१७॥

किं च अस्य-

**लोकानन्दः समाधिसुखम् ॥१८॥**

लोक्यते इति लोको, वस्तुग्रामः, लोकयति इति च लोको, ग्राहकवर्गः, तस्मिन्स्फुरति सति

`ग्राह्य ग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽयं संबन्धे सावधानता ॥`

इति श्रीविज्ञानभट्टारकनिरूपितनीत्या प्रमातृपदविश्रान्त्यवधानतश्चमत्कार-मयो य आनन्द एतदेव अस्य समाधिसुखम् । तदुक्तं तत्रैव

`सर्वं जगत्स्वदेहं वा स्वानन्दभरितं स्मरेत् ।
युगपत्स्वामृतेनैव परानन्दमयो भवेत् ॥`

इति । एतच्च

`इय मेवामृतप्राप्तिः ....................।`३२ (कारिका)

इत्यनेन संगृहीतम् ।

अथ च यत् अस्य स्वात्मारामस्य समाधिसुखं, तदेव तत्तादृशम् अवलो-कयतां लोकानाम् आनन्दसंक्रमणयुक्त्या स्वानन्दाभिव्यक्तिपर्यवसायि भवति । एतदपि श्रीचन्द्रज्ञानग्रन्थेन प्रागुक्तेन (सू० ७) सुसंवादम् ॥१८॥

अथ ईदृशस्य अस्य योगिनो विभुतियोगं दर्शयति-

**शक्तिसन्धाने शरीरोत्पत्तिः ॥१९॥**

`इच्छा शक्तिरुमा कुमारी` (१-१३) इति सूत्रेण या अस्य शक्तिरुक्ता, तामेव यदा अनुसंधत्ते, दार्ढ्येन तन्मयीभवति, तदा तद्वशेन अस्य यथाभिमतं शरीरमुत्पद्यते । तदुक्तं श्रीमृत्युञ्जयभट्टारके

`ततः प्रवर्तते शक्तिर्लक्ष्य हीना निरामया ।
इच्छा सा तु विनिर्दिष्टा ज्ञानरूपा क्रियात्मिका ॥`

इत्युपक्रम्य

`सा योनिः सर्वदेवानां शक्तीनां चाप्यनेकधा ।
अग्नीषोमात्मिका योनिस्तस्यां सर्वं प्रवर्तते ॥`

इति । शक्तिसंधानमाहात्म्यं लक्ष्मीकौलार्णवे

`न संधानं विना दीक्षा न सिद्धीनां च साधनम् ।
न मन्त्रो मन्त्रयुक्तिश्च न योगाकर्षणं तथा ॥`

इत्यादिना प्रतिपादितम् । एतच्च

`यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान्हृदिस्थितान् ।
सोमसूर्योदयं कृत्वा संपादयति देहिनः ॥`

इत्यनेन संगृहीतम् । देहिनः अत्यक्तदेहवासनस्य योगिनो हृदि स्थितान् अर्थान् तत्तदपूर्वनिर्माणादिरूपान् धाता महेश्वरः प्रकाशानन्दात्मतया सोमसूर्यरूपवाहोन्मीलनेन सोमसूर्यसामरस्यात्मनश्च शक्तेरुदयं कृत्वा बहिर्मुखवाहित्वेन तामासाद्य संपादयति, इति हि अस्यार्थः

`तथा स्वप्नेऽप्यभीष्टार्थान् ...।`

इत्येतच्छ्लोकप्रतिपादितस्वप्नस्वातन्त्र्यं प्रति दृष्टान्ते योजितः, इति स्पन्दनिर्णये मयैव दर्शितम् ॥१९॥

अन्या अपि अस्य यथाभिलषिताः सिद्धय एतन्माहात्म्येनैव घटन्ते इत्याह-

**भूतसंधानभूतपृथक्त्वविश्वसंघट्टाः ॥२०॥**

भूतानि शरीरप्राणभावाद्यात्मकानि, तेषां क्वचित् आप्यायनादौ संधानं, परिपोषणं, व्याध्याद्युपशमादौ पृथक्त्वं, शरीरादेर्विश्लेषणं, देशकालादि-विप्रकृष्टस्य च विश्वस्य संघट्टो, ज्ञानविषयीकार्यत्वादिकः, अस्य पूर्वोक्त-शक्तिसंधाने सति जायते । एतच्च सर्वागमेषु साधनाधिकारेषु अस्ति । तदेव स्पन्दे

`दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः ॥`

इति ।

`ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेष विलुप्तं चेत्कुतः सा स्यादहेतुका ॥`

इति ।

`यथा ह्यर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतसि ।
भूयः स्फुटतरो भाति स्व बलोद्योगभावितः ॥
तथा यत्परमार्थेन येन यत्र यथा स्थितम् ।
तत्तथा बलमाक्रम्य न चिरात्संप्रवर्तते ॥`

इत्यादिना विभूतिस्पन्दे सोपपत्तिकं दर्शितम् ॥२०॥

यदा तु मितसिद्धीरनभिलष्यन् विश्वात्मप्रथामिच्छति तदा अस्य-

**शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः ॥२१॥**

वैश्वात्म्यप्रथावाञ्छया यदा शक्तिसंधत्ते तदा `अहमेव सर्वम्` इति शुद्धविद्याया उदयात् विश्वात्मकस्वशक्तिचक्रेशत्वरूपं माहेश्वर्यमस्य सिद्ध्यति । तदुक्तं स्वच्छन्दे

`तस्मात्सा तु परा विद्या यस्मादन्या न विद्यते ।
विन्दते ह्यत्र युगपत्सार्वज्ञ्यादिगुणान्परान् ॥

वेद नानाद्विधर्मस्य परमात्मत्वबोधना ।
वर्जनापरमात्मत्वे तस्माद्विद्येति सोच्यते ॥

तत्रस्थो व्यञ्जयेत्तेजः परं परमकारणम् ।

परस्मिंस्तेजसि व्यक्ते तत्रस्थः शिवतां व्रजेत् ॥

इति । तदेतत्

`दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।

तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥`

इत्यनेनैव संगृहीतम् ॥२१॥

यदा तु स्वात्मारामतामेव इच्छति तदा अस्य-

**महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः ॥२२॥**

पराभट्टारिका संवित् इच्छाशक्तिप्रमुखं स्थूलमेयपर्यन्तं विश्वं वमन्ती, खेचरीचक्राद्यशेषवाहप्रवर्तकत्व-स्वच्छत्वानावृतत्व-गभीरत्वादि-धर्मयोगान्महा-ह्रदः, तस्यानुसंधानात्, अन्तर्मुखतया अनारतं तत्तादात्म्यविमर्शनात्, वक्ष्यमाणस्य शब्दराशिस्फारात्मकपराहन्ता-विमर्शमयस्य मन्त्रवीर्यस्यानुभवः, स्वात्मरूपतया स्फुरणं भवति । अत एव श्रीमालिनीविजये

`या सा शक्तिर्जगद्धातुः ...।`

इत्युपक्रम्य इच्छादिप्रमुखपञ्चाशद्भेदरूपतया मातृका-मालिनीरूपताम् अशेषविश्वमयीं शक्तेः प्रदर्श्य, तत एव मन्त्रोद्धारो दर्शितः, इति परैव शक्ति-र्महाह्रदः, ततः तदनुसंधानात् मातृका-मालिनीसतत्त्वमन्त्रवीर्यानुभव इति युक्तमुक्तम् । एतदेव

`तदाक्रम्य बलं मन्त्राः ...,`

इत्याद्युक्त्या भङ्ग्या प्रतिपादितम् ।

तदेवं `चैतन्यमात्मा` (१-१) इत्युपक्रम्य तत्स्वातन्त्र्यावभासिततदख्याति-मयं सर्वमेव बन्धं यथोक्तोद्यमात्मकभैरवसमापत्तिः प्रशमयन्ती, विश्वं स्वानन्दामृतमयं करोति, सर्वाश्च सिद्धीः मन्त्रवीर्यानुप्रवेशान्ता ददाति, इति

शाम्भवोपायप्रथनात्मा अयं प्रथम उन्मेष उक्तः । अत्र तु मध्ये शक्ति-स्वरूपमुक्तं, तत् शाम्भवरूपस्य शक्तिमत्ताप्रदर्शनाभिप्रायेण इति शिवम् ॥२२॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तपादपाद्मोपजीवि-श्रीक्षेमरज-विरचितायां शिवसूत्रविमर्शिन्यां शाम्भवोपायप्रकाशनं नाम प्रथम उन्मेषः ॥१॥

—:o:—

## शिवसूत्रविमर्वशिनी

### अथ द्वितीय उन्मेषः

इदानीं शाक्तोपायः प्रदर्श्यते । तत्र शक्तिः मन्त्रवीर्यस्फाररूपा, इति प्रथमोन्मेषान्तसूत्रिततत्स्वरूपविवेचनपुरःसरमुन्मेषान्तरमारभमाणो मन्त्रस्वरूपं तावत् निरूपयति-

**चित्तं मन्त्रः ॥१॥**

चेत्यते विमृश्यते अनेन परं तत्त्वम् इति चित्तं, पूर्णस्फुरत्तासतत्त्वप्रासाद-प्रणवादिविमर्शरूपं संवेदनम्, तदेव मन्त्र्यते गुप्तम्, अन्तर् अभेदेन विमृश्यते परमेश्वररूपम् अनेन, इति कृत्वा मन्त्रः । अत एव च परस्फुरत्तात्मकमनन-धर्मात्मता, भेदमयसंसारप्रशमनात्मक-त्राणधर्मता च अस्य निरुच्यते । अथ च मन्त्रदेवताविमर्शपरत्वेन प्राप्ततत्सामरस्यम् आराधकचित्तमेव मन्त्रः न तु विचित्रवर्णसंघट्टनामात्रकम् । यदुक्तं श्रीमत्सर्वज्ञानोत्तरे

`उच्चार्यमाणा ये मन्त्रा न मंत्रांश्चापि तान्विदुः ।
मोहिता देवगन्धर्वा मिथ्याज्ञानेन गर्विताः ॥`

इति । श्रीतन्त्रसद्भावेऽपि

`मन्त्राणां जीवभूता तु या स्मृता शक्तिरव्यया ।
तया हीना वरारोहे निष्फलाः शरदभ्रवत् ॥`

इति । श्रीश्रीकण्ठीसंहितायां तु

`पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन ।
ज्ञानमूलमिदं सर्वमन्यथा नैव सिद्ध्यति ॥`

इत्युक्तम् । एतच्च स्पन्दे

`सहाराधकचित्तेन तेनैते शिवधर्मिणः ॥`

इति भङ्ग्या प्रतिपादितम् ॥१॥

अस्य च-

**प्रयत्नः साधकः ॥२॥**

यथोक्तरूपस्य मन्त्रस्य अनुसंधित्सा प्रथमोन्मेषावष्टम्भप्रयतनात्मा अकृतको यः प्रयत्नः स एव साधको, मन्त्रयितुर्मन्त्रदेवतातादात्म्यप्रदः ।

तदुक्तं श्रीतन्त्रसद्भावे

`आमिषं तु यथा खस्थः संपश्यञ्शकुनिः प्रिये ।
क्षिप्रमाकर्षयेद्यद्वद्वेगेन सहजेन तु ॥
तद्वदेव हि योगीन्द्रो मनो बिन्दुं विकर्षयेत् ।
यथा शरो धनुःसंस्थो यत्नेनाताड्य धावति ॥
तथा बिन्दुर्वरारोहे उच्चारेणैव धावति ॥`

इति । अन्यत्रापि

`तद्ग्रहो मन्त्रसद्भावः ...।`

इति । अत्र हि तद्वत्, इति अकृतकनिजोद्योगबलेन योगीन्द्रो मनः (कर्म ),

बिन्दुं विकर्षयेत् परप्रकाशात्मतां प्रापयेम् इति । तथा बिन्दुः परप्रकाशः अकृतकोद्यन्तृतात्मना उच्चारेण धावति, प्रसरति इत्यर्थः । एतच्च स्पन्दे

`अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या ॥`

इत्यनेनोक्तम् ॥२॥

ईदृशसाधकसाध्यस्य मन्त्रस्य पूर्वोपक्षिप्तं वीर्यं लक्षयति—

**विद्याशरीरसत्ता मन्त्ररहस्यम् ॥३॥**

विद्या पराद्वयप्रथा, शरीरं स्वरूपं, यस्य स विद्याशरीरो भगवान् शब्दराशिः, तस्य या सत्ता, अशेषविश्वाभेदमयपूर्णाहंविमर्शनात्मा स्फुरत्ता, सा मन्त्राणां रहस्यम्, उपनिषत् । यदुक्तं श्रीतन्त्रसद्भावे

`सर्वे चर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥`

इति । तत्रैव च अयमर्थः अतिरहस्योऽपि वितत्य स्फुटीकृतः । तथा च

`न जानन्ति गुरू देवं शास्त्रोक्तान्समयांस्तथा ।
दम्भकौटिल्यनिरता लौल्यार्थाः क्रिययोज्झिताः ॥
अस्मात्तु कारणाद्देवि मया विर्यं प्रगोपितम् ।
तेन गुप्तेन ते गुप्ताः शेषा वर्णास्तु केवलाः ॥`

इति पीठिकाबन्धं कृत्वा

`या सा तु मातृका देवि परतेजः समन्विता ।
तया व्याप्तमिदं विश्वं सब्रह्मभुवनान्तकम् ॥
तत्रस्थं च यदा देवि व्यापितं च सुरार्चिते ।
अवर्णस्थो यथा वर्णः स्थितः सर्वगतः प्रिये ॥

तथाहं कथयिष्यामि निर्णयार्थं स्फुटं तव ।`

इत्युपक्रम्य

`या सा शक्तिः परा सुक्ष्मा निराचारेति कीर्तिता ॥
हृद्विन्दुं वेष्टयित्वान्तः सुषुप्तभुजगाकृतिः ।
तत्र सुप्ता महाभागे न किञ्चिन्मन्यते उमे ॥
चन्द्राग्निरविनक्षत्रैर्भुवनानि चतुर्दश ।
क्षिप्त्वोतरे तु या देवी विषमूढेव सा गता ॥
प्रबुद्धा सा नानादेन परेण ज्ञानरूपिणा ।
मथिता चोदरस्थेन विन्दुना वरवर्णिनि ॥
तावद्वै, भ्रमवेगेन मथनं शक्तिविग्रहे ।
भेदात्तु प्रथमोत्पन्ना विन्दवस्तेऽतिवर्चसः ॥
उत्थिता तु यदा तेन कला सूक्ष्मा तु कुण्डली ।
चतुष्कलमयो विन्दुः शक्तेरूदरगः प्रभुः ॥
मथ्यमन्थनयोगेन ऋजुत्वं जायते प्रिये ।
ज्येष्ठाशक्तिः स्मृता सा तु विन्दुद्वयसुमध्यगा ॥
बिन्दुना क्षोभमायाता रेखैवामृतकुण्डली ।
रेखिणी नाम सा ज्ञेया उभौ बिन्दू यदन्तगौ ॥
त्रिपथा सा समाख्याता रौद्री नाम्ना तु गीयते ।
रोधिनी सा समुद्दिष्टा मोक्षमार्गनिरोधनात् ॥
शशाङ्कशकलाकारा अम्बिका चार्धचन्द्रिका ।
एकैवेत्थं परा शक्तिस्त्रिधा सा तु प्रजायते ॥
आभ्यो युक्तवियुक्ताभ्यः संजातो नववर्गकः ।
नवधा च स्मृता सा तु नववर्गोपलक्षिता ॥
पञ्चमन्त्रगता देवि सद्य आदिरनुक्रमात् ।

तेन पञ्चविधा प्रोक्ता ज्ञातव्या सुरनायिके ॥
स्वरद्वादशगा देवि द्वादशस्था उदाहृता ।
अकारादिक्षकारान्ता स्थिता पञ्चाशता भिदा ॥
हृत्स्था एकार्णवा प्रोक्ता कण्ठे प्रोक्ता द्वितीयका ।
त्रिरार्णवा तु ज्ञातव्या जिह्वामूले सदा श्रिता ॥
जिह्वाग्रे वर्णनिष्पत्तिर्भवत्यत्र न संशयः ।
एवं शब्दस्य निष्पत्तिः शब्दव्याप्तं चराचरम् ॥'

इत्यादिना ग्रन्थेन परभैरवीयपरवाक्शक्त्यात्मकमातृका, अत एव ज्येष्टा-रौद्री-अम्बाख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयस्य उक्तत्वात्, वर्णसंघट्टनाशरीराणां मन्त्राणां सैव भगवती व्याख्यातरूपा विद्याशरीरसत्ता रहस्यम्— इति प्रदर्शितम् ।

प्रत्यागमं च मातृकामालिनीप्रस्तारपूर्वकं मन्त्रोद्धारकथनस्य अयमेव आशयः । रहस्यागमसारसंग्रहरूपत्वात् शिवसूत्राणाम् आगमसंवादे भरः अस्माभिः कृत इति नास्मभ्यम् असूयितव्यम् ।

एवमपि संवादिते आगमे यदि रहस्यार्थो न बुद्ध्यते, तस्मात् सद्गुरुसपर्या कार्या । एष च सूत्रार्थः

'तदाक्रम्य बलं मन्त्राः ...।'

इत्यनेन कारिकाद्वयेन स्पन्दे दर्शितः ॥३॥

येषां तु एवं विधमेतन्मन्त्रवीर्यं प्रोक्तमहाह्रदानुसंधानौपयिकमपि परमेश्वरेच्छात एव न हृदयङ्गमीभवति, अपि तु आनुषङ्गिकमात्रविन्दुनादादिकलाजनितासु मितसिद्धिषु चित्तं रोहति, तेषाम्—

**गर्भे चित्तविकासोऽविशिष्टविद्यास्वप्नः ॥४॥**

गर्भः अख्यातिर्महामाया, तत्र तदात्मके मितमन्त्रसिद्धिप्रपञ्चे यश्चित्तस्य विकासः, तावन्मात्रे प्रपञ्चे संतोषः असावेव अविशिष्टा, सर्वजनसाधारण-रूपाः विद्या, किञ्चिज्ज्ञत्वरूपा अशुद्धविद्या, सैव स्वप्नो, भेदनिष्ठो विचित्रो विकल्पात्मा भ्रमः। तदुक्तं पातञ्जले

`ते समाधावुपसर्गा व्युत्थाने सिद्धयः` (३-३७)

इति । तदेतत्

`अतो विन्दुरतो नादो रूपमस्मततो रसः ।
प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनाः ॥`

इत्यनेन दर्शितम् ॥४॥

यदां तु आगतामपि मितसिद्धिं खिलीकृत्य परामेव स्थिति-मवष्टभ्नाति योगी तदाः—

**विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था ॥५॥**

प्राङ्निर्दिष्टसतत्त्वाया विद्यायाः स्वाभाविके समुत्थाने, मरमेशेच्छामात्र-घटिते मितसिद्धिन्यग्भाविनि सहजे समुन्मज्जने, खे बोधगगने चरति इति खेचरी मुद्रा अभिव्यज्यते । कीदृशी खेचरी, शिवस्य चिन्नाथस्य अवस्थातुः संबन्धिनी अवस्था, स्वानन्दोच्छलत्तारूपा । न तु

`बद्ध्वा प द्मासनं योगी नाभावक्षेश्वरं न्यसेत् ।
दण्डाकारं तु तावत्तन्नयेद्यावत्कखत्रयम् ॥
निगृह्य तत्र तत्तूर्णं प्रेरयेत् खत्रयेण तु ।
एतां बद्ध्वा महायोगी खे गतिं प्रतिपद्यते ॥`

इत्येवं संस्थानविशेषानुसरणरूपा, अपि तु

.............................. पराम् ।

गतिमेत्यर्थभावेन कुल मार्गेण नित्यशः ॥

चरते सर्वजन्तूनां खेचरी नाम सा स्मृता ।`

इति श्रीतन्त्रसद्भावनिरूपितपरसंवित्तिस्वरूपा । एवमिह भेदात्मकमायीयसमस्तक्षोभप्रशान्त्या चिदात्मकस्वरूपोन्मज्जनैकरूपं मन्त्रवीर्यं मुद्रावीर्यं च आदिष्टम् । तदुक्तं कुलचूडामणौ

`एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी ।

द्वावेतौ यस्य जायेते सोऽतिशान्तपदे स्थितः ॥`

इति । स्पन्दे तु मन्त्रवीर्यस्वरूपनिरूपणेनैव मुद्रावीर्यं संगृहीतम्।

`यदा क्षोभः प्रलोयेत तदा स्यात्परमं पदम् ।`

इत्यर्धेन अन्यपरेणापि चूडामण्युक्तं खेचरीस्वरूपं भङ्ग्या सूचितम् ॥५॥

तदत्र मुद्रामन्त्रवीर्यासादनेऽपि—

**गुरूरुपायः ॥६॥**

गृणाति उपदिशति तात्त्विकमर्थमिति गुरुः, सोऽत्र व्याप्तिप्रदर्शकत्वेन उपायः । तदुक्तं श्रीमालिनीविजये

`स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ।`

इति । स्पन्दे तु एवमादिप्रसिद्धत्वात् न संगृहीतम् ।

`अगाधसं शयाम्भोधिसमुत्तरणतारिणीम् ।

वन्दे विचित्रार्थपदां चित्रां तां गुरुभारतीम् ॥`

इति पार्यन्तिकोक्त्या च एतदपि संगृहीतमेव ।

गुरुर्वा पारमेश्वरी अनुग्राहिका शक्तिः । यथोक्तं श्रीमालिनीविजये

`शक्तिचक्रं तदेवोक्तं गुरुवक्त्रं तदुच्यते ।`

इति । श्रीमन्त्रिशिरोभैरवेऽपि

'गुरोर्गुरुतरा शक्तिर्गुरुवक्त्रगता भवेत् ।'

इति । सैव अवकाशं ददती उपायः ॥६॥

तस्माद्गुरोः प्रसन्नात्—

मातृकाचक्रसम्बोधः ॥७॥

शिष्यस्य भवतीति शेषः। श्रीपरात्रिंशकादिनिर्दिष्टनीत्या अहंविमर्शप्रथम-कला अनुत्तराकुलस्वरूपा, प्रसरन्ती आनन्दस्वरूपा सती, इच्छेशनभूमिका-भासनपुरःसरं, ज्ञानात्मिकामुन्मेषदशां ज्ञेयाभासासूत्रेणाधिक्येन च ऊनतां प्रदर्श्य, इच्छामेव द्विरूपां विद्युद्विद्योतनकल्पतेजोमात्ररूपेण, स्थैर्यात्मना च एषणीयेन रञ्जितत्वात् र-लश्रुत्या आरूषितेन, अत एव स्वप्रकाशात्मीकृत-मेयाभासत्वतः अमृतरूपेण, मेयाभासारूषणमात्रतश्च बीजान्तरप्रसवासमर्थ-तया, षण्ढाख्यबीजचतुष्टयात्मना रूपेण प्रपञ्च्य, प्रोक्तानुत्तरानन्देच्छासंघट्टेन त्रिकोणबीजम्, अनुत्तरानन्दोन्मेषयोजनया च क्रियाशक्त्युपगमरूपमोकारं, प्रोक्तैतद्बीजद्वयसंघट्टेन षट्कोणं शूलबीजं च, इच्छाज्ञानशक्तिव्याप्तपूर्णक्रिया शक्तिप्रधानत्वात् शक्तित्रयसंघट्टनमयं प्रदर्श्य, इयत्पर्यन्तविश्वैकवेदनरूपं बिन्दुमुन्मील्य, युगपदन्तर्बहिर्विसर्जनममयविन्दुद्वयात्मानं विसर्गभूमि-मुद्दर्शितवती, अत एव अन्तर्विमर्शनेन अनुत्तरे एव एतद्विश्वं विश्रान्तं दर्शयति, बहिर्विमर्शेन तु कादि-मान्तं पञ्चकपञ्चकम् अ-इ-उ-ऋ-लृशक्तिभ्यः पुरुषान्तं समस्तं प्रपञ्चयति । एकैकस्याश्च शक्तेः पञ्चशक्तित्वमस्ति, इत्येकैकतः पञ्चकोदयः । आभ्य एव शक्तिभ्यः शिक्षोक्तसंज्ञानुसारेण अन्तः-पुंभूमौ नियत्यातिकञ्चुकत्वेन अवस्थानात् अन्तःस्थाख्यान्प्रमातृभूमिधारणेन विश्वधारणात् धारणाशब्देन आम्नायेषु उक्तान्, तदुपरि भेदविगलनेन अभोदापत्त्या उन्मिषितत्वात् ऊष्माभिधानान् चतुरो वर्णानाभासितवती ।

अत्र च अन्ते सर्वसृष्टिपर्यन्तवर्ति परिपूर्णममृतवर्णं प्रदर्श्य, तदन्ते प्राणबीज-प्रदर्शनं कृतम, तत् अनुत्तरशक्त्याप्यायितानाहतमयम्, इयद्वाच्यवाचकरूपं षडध्वस्फारमयं विश्वम्, इति प्रत्यभिज्ञापयितुम् । अत एव प्रत्याहारयुक्त्या अनुत्तरानाहताभ्यामेव शिवशक्तिभ्यां गर्भीकृतम् एतदात्मकमेव विश्वम्, इति महामन्त्रवीर्यात्मनोऽहंविमर्शस्य तत्त्वम् । यथोक्तमस्मतपरमेष्ठ श्रीमदुत्पलदेवपादैः

`प्र काशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।
उक्ता सैव च विश्रान्तिः सर्वापेक्षानिरोधतः ।।
स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च ।`

इति । तदियत्पर्यनतं यन्मातृकायास्तत्त्वं तदेव ककार- सकारप्रत्याहारेण अनुत्तरविसर्गसंघट्टसारेण कूटबीजेन प्रदर्शितमन्ते, इत्यलं रहस्यप्रकटनेन । एवंविधायाः

` ...................... न विद्या मातृकापरा ।`

इत्याम्नायसूचितप्रभावाया मातृकायाः संबन्धिनश्चक्रस्य प्रोक्तानु-त्तरानन्देच्छादिशक्तिसमूहस्य चिदानन्दघनस्वस्वरूपसमावेशमयः सम्यक् बोधो भवति । एतच्चेह दिङ्मात्रेणोट्टङ्कितम् । विततं तु अस्मत्-प्रभुपादैः श्रीपरात्रिंशकाविवरण-तन्त्रालोकादौ प्रकाशितम् । उक्तं च श्रीसिद्धामृते

`सात्र कुण्डलिनी बीजजीवभूता चिदात्मका ।
तज्जं ध्रुवेच्चोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ।।
आ इत्यवर्णादित्यादि यावद्वैसर्गिकी कला ।
ककारादिसकारान्ता विसर्गात्पञ्चधा स च ।।
बहिश्चान्तश्च हृदये नादेऽथ परमे पदे ।
बिन्दुरात्मनि मूर्धान्ते हृदयाद्व्यापको हि सः ।।

आदिमान्त्यविहीनास्तू मन्त्राः स्युः शरदभ्रवत् ।
गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत् ॥
पूज्यः सोऽहमिव ज्ञानी भैरवो देवतात्मकः ।
श्लोकगाथादि यत्किञ्चिदादिमान्त्ययुतं यतः ॥
तस्माद्विदंस्तथा सर्वं मन्त्रत्वेनैव पश्यति ।`

इति । एतच्च स्पन्दे

`सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री .......`

इत्युपक्रम्य

`स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥`

इत्यनेनैव भङ्ग्या सूचितम् ॥७॥

ईदृशस्य अस्य मातृकाचक्रसंबोधवतः —

## शरीरं हविः ॥८॥

सर्वैश्वर्यप्रमातृत्वेन अभिषिक्तं स्थूलसूक्ष्मादिस्वरूपं शरीरं तत् महायोगिनः परस्मिन् चिदग्नौ हूयमानं हविः, शरीरप्रमातृताप्रशमनेन सदैव चिन्मातृताभिनिविष्टत्वात् । यदुक्तं श्रीविज्ञानभैरवे

`महाशून्यालये वह्नौ भूताक्षविषयादिकम् ।
हूयते मनसा साकं स होमः स्रुक्च चेतना ॥`

इति । श्रीतिमिरोद्घाटेऽपि

`यः प्रियो यः सुहृद्बन्धुर्यो दाता योऽतिवल्लभः ।
तदङ्गं भक्षणाद्देवि ह्युत्पतेद्गगनाङ्गना ॥`

इति । अत्र हि देहप्रमातृताप्रशमनमेव पिण्डार्थः । श्रीमद्भगवद्गीतास्वपि

`सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥`

इति । स्पन्दे तु

`यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ।`

इत्यनेनैव संगृहीतम् । क्षोभो देहाद्यहंप्रत्ययरूपः,
इति हि तद्वृत्तौभट्टश्रीकल्लटः ॥८॥

अस्य च-

ज्ञानमन्नम् ॥९॥

यत्पूर्व `ज्ञानं बन्धः` (१-२) इत्युक्तं तत अद्यमानत्वात्, ग्रस्यमानत्वात्
योगिनामन्नम् । यत्संवादितं प्राक्

`मृत्युं च कालं च कलाकलापं
विकारजातं प्रतिपत्तिसात्म्यम् ।
ऐकात्म्य-नानात्म्यवितर्कजातं
तदा स सर्वं कवलीकरोति ॥`

इति ।

अथ च यत्स्वरूपविमर्शात्मकं ज्ञानं तत् अस्य अन्नं, पूर्णपरितृप्तिकारितया
स्वात्मविश्रान्तिहेतुः । तदुक्तं श्रीविज्ञानभैरवे

`अत्रैकतम युक्तिस्थे योत्पद्येत दिनाद्दिनम् ।
भरिताकारिता सात्र तृप्तिरत्यन्तपूर्णता ॥`

इति । युक्तिर्हि तत्र द्वादशोत्तरशतभूमिकाज्ञानरूपैव । एतच्च स्पन्दे

`प्रबुद्धः सर्वदा तिष्ठेत् ...।`

इत्यनया कारिकया संगृहीतम् ॥९॥

